# संस्कृत-साहित्यवार्ता

पाटलिपुत्रस्थ राजकीय महाविद्यालय ( पटना कॉलेज )
प्राप्तावसर संस्कृतप्रधानाध्यापकेन
विहारगौरवेणाचार्य श्रीदेवदत्त
त्रिपाठिना विरचिता ।





प्रकाशक—

**प्रकाशन-परिषद्,**

श्रीवेणी पुस्तकालय, तारणपुर,

डाकघर-पुनपुन, जिला—पटना ।






एषा संस्कृतसाहित्यवार्ता विद्यार्थिनां मुदे ।
कृता चतुर्भिरध्यायैर्देवदत्तत्रिपाठिना ॥१॥
भक्त्या समर्पिता चेयं सच्चिदानन्दमूर्तये ।
काशीश्वराय विभवे विश्वनाथाय शम्भवे ॥२॥



# दो शब्द

कुछ ही दिन पूर्व गुरुजी की 'हिन्दी-साहित्यचर्चा' नामक पुस्तक संस्कृत में प्रकाशित हो चुकी है। उसमें वर्तमान और प्राचीन हिन्दी का इतिहास संस्कृत के सरल और सुबोध श्लोकों में सूत्ररूप में दिया गया है। संस्कृत द्वारा हिन्दी के प्रचार और प्रसार का यह अभिनव प्रयास है। इससे दोनों को लाभ है, आधुनिक हिन्दी की जननी देववाणी संस्कृत को और उसकी एकलौती कन्या हिन्दी को भी। जिन गुणीजनों के हाथ में वह पुस्तक गयी उन्होंने मुक्तकंठ से इसकी और लेखक की सूझ की प्रशंसा की। साहित्यानुरागियों के समाज में उस पुस्तक का सम्मान देखकर गुरुजी ने वर्तमान पुस्तक लिखी। वह हिन्दी साहित्य का इतिहास था, यह संस्कृत साहित्य का। पुस्तक का कलेवर देखकर जो कोई इसके मूल्यांकन का प्रयास करेगा, वह सम्भवतः न्याय न कर सकेगा। इस पुस्तक के विषय में 'गागर में सागर' कहना उपयुक्त होगा। साहित्य के सच्चे पारखी ही इसका सही सही मूल्यांकन कर सकेंगे।

इस पुस्तक का प्रकाशन तारणपुर (डाकघर पुनपुन, जिला पटना, बिहार) के श्रीवेणी पुस्तकालय की ओर से हुआ है। इस पुस्तकालय के प्रति गुरुजी का ममत्व है, सहानुभूति और सहयोग है। अभी तीन वर्ष पूर्व वसन्त-पंचमी के अवसर पर

पुस्तकालय के भवन का शिलान्यास गुरुजी के करकमलों से कराया गया था। भवन का शुभारम्भ भी गुरुजी ही करेंगे, इसी आगामी वसन्तपंचमी को।

गुरुजी की इच्छा थी कि इस पुस्तक का प्रकाशन श्रीवेणी पुस्तकालय करे। अतः उनके इच्छानुकूल पुस्तकालय की प्रकाशन-परिषद् ने प्रकाशन का उत्तरदायित्व अपने पर लिया। परिषद् ने इसके पूर्व गुरुजी की और एक पुस्तक का प्रकाशन किया है। उसका नाम है—'वेदान्तमत-मंजरी'। साहित्य-मर्मज्ञों ने उसका समुचित समादर किया और आजतक उसकी माँग बनी है। प्रकाशन के क्षेत्र में पुस्तकालय का यह दूसरा प्रयास है। मुझे विश्वास है कि ऐसे ग्रन्थरत्नों के प्रकाशन से यह संस्था अपने उद्देश्य की पूर्त्ति तथा अपने गौरव के विस्तार का प्रयत्न करती है।

विनीत—

पारसनाथ सिंह
संयोजक, प्रकाशन-परिषद्,
श्रीवेणी पुस्तकालय।

तारणपुर,
मार्गशीर्ष, भैरवाष्टमी,
संवत् २००९ वि०

# संस्कृत-साहित्यवार्ता

नत्वा वागीश्वरीं देवीं श्रीगणेशञ्च शङ्करम् ।
स्तुत्यसंस्कृत-साहित्य वार्ता प्रस्तूयते मया ॥ १ ॥
आदावनाद्यनन्तत्वान्मान्यत्वाच्च मनीषिणाम् ।
नित्यत्वाद् ब्रह्मरूपत्वाद् वार्ता वेदस्य वर्ण्यते ॥ २ ॥
ब्रह्मनिःश्वाससम्भूतो वेदो ब्रह्मर्षिसम्मतः ।
आर्याणाम्प्रथमो धर्मग्रन्थोऽनादिः प्रकीर्तितः ॥ ३ ॥
अपौरुषेयो वेदस्तु पुरा कल्पे महर्षिभिः ।
दृष्टः पश्चाद् विभक्तश्च वेदव्यासमहर्षिणा ॥ ४ ॥
ऋग्वेदः प्रथमो भागो यजुर्वेदोद्वितीयकः ।
तृतीयः सामवेदोऽभूच्चतुर्थोऽथर्वनामकः ॥ ५ ॥
सवैशम्पायनः पैलः ससुमन्तुश्च जैमिनिः ।
व्यासस्य शिष्याश्चत्वारश्चतुर्वेदप्रचारकाः ॥ ६ ॥
पैलो महामुनिरभूदृग्वेदस्योपदेशकः ।
यजुर्वेदप्रवक्तासीत् स वैशम्पायनो मुनिः ॥ ७ ॥
जैमिनिः सामवेदस्य प्रवर्तकवरोऽभवत् ।
तथा सुमन्तुविख्यातोऽथर्ववेद प्रचारकः ॥ ८ ॥
वेदेषु भागाश्चत्वारो विद्यन्ते संहितादयः ।
छन्दो बद्धो मन्त्ररूपः संहिता भाग उच्यते ॥ ९ ॥
गद्यबद्धो ब्राह्मणाख्यो भागो यज्ञादिबोधकः ।
चतुर्णामपि वेदानां ब्राह्मणानि पृथक् पृथक् ॥ १० ॥

आरण्यकाख्यो भागस्तु गद्यपद्यमयात्मकः ।
वानप्रस्थाश्रमे सेव्यो विपिनेषु जितेन्द्रियैः ॥ ११ ॥
चतुर्थोपनिषद् भागः परा विद्या प्रकीर्तिता ।
चतुर्थाश्रमिभिः सेव्या ब्रह्मानन्दप्रदायिका ॥ १२ ॥
छन्दः पादोऽस्ति वेदस्य कल्पो हस्तः प्रकीर्तितः ।
नयनं ज्योतिषं ख्यातं निरुक्तं श्रोत्रमुच्यते ॥ १३ ॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् ।
षडङ्गं वेदमभ्यस्य द्विजो भवति सर्ववित् ॥ १४ ॥
वैदिकानां छन्दसान्तु छन्दःशास्त्रेषु वर्णनम् ।
कल्पे यज्ञविधीनान्तु विस्तरेणास्ति वर्णनम् ॥ १५ ॥
यज्ञारम्भमुहूर्तानां ज्यौतिषादेव निर्णयः ।
निरुक्ते सिद्धशब्दानां व्युत्पत्तिरुपदर्शिता ॥ १६ ॥
सुशब्दोच्चारणविधिः शिक्षायामुपवर्णितः ।
शब्दसाधन रीतिस्तु व्याकृतौ परिदर्शिता ॥ १७ ॥
ऋक् प्रातिशाख्यं रचितं शौनकेन महर्षिणा ।
यजुर्वेदप्रातिशाख्यं कात्यायनकृतं मतम् ॥ १८ ॥
सामवेदप्रातिशाख्यंमथर्वप्रातिशाख्यकम् ।
तथान्यप्रातिशाख्यानि रचितानि मनीषिभिः ॥ १९ ॥
छन्दः सूत्रैरतिख्यातैः पिङ्गलेन महर्षिणा ।
सर्ववेदाङ्घ्रिरूपाणां छन्दसां वर्णनं कृतम् ॥ २० ॥
याज्ञवल्क्यकृता शिक्षा यजुर्वेदस्य कीर्तिता ।
सामवेदस्य शिक्षा तु नारदीया निगद्यते ॥ २१ ॥
महर्षियास्काचार्येण निरुक्तं रचितम्पुरा ।
यत्र वैदिकशब्दानां निरुक्तिरुपवर्णिता ॥ २२ ॥
श्रौतसूत्रैर्गृह्यसूत्रैधर्मसूत्रैस्तथैव च ।
वेदाङ्गोवर्णितः कल्पः पुरा कात्यायनादिभिः ॥ २३ ॥

आयुर्वेदो धनुर्वेदस्तथा गान्धर्वनामकः ।
अर्थशास्त्रञ्च चत्वार उपवेदाः प्रकीर्तिताः ॥ २४ ॥
ऋग्वेदस्यापवेदो वाथर्ववेदस्य कथ्यते ।
आयुर्वेदोतिविख्यातो ब्रह्मा यस्य प्रवर्तकः ॥ २५ ॥
चरकः सुश्रुतश्चैव वागभटो माधवस्तथा ।
भावमिश्रादयोऽभूवन्नायुर्वेदप्रचारकाः ॥ २६ ॥
यजुर्वेदोपवेदस्तु धनुर्वेदोऽभवत्पुरा ।
शिक्षितो विधिवद् भूपैः संग्रामाध्वरदीक्षितैः ॥ २७ ॥
वशिष्ठविश्वामित्राद्या जामदग्न्यादिकास्तथा ।
भरद्वाजादिकाश्चैते धनुर्वेदप्रवर्तकाः ॥ २८ ॥
सामवेदोपवेदोऽभूद् गान्धर्वाख्योपवेदकः ।
सङ्गीतरत्नाकराद्यास्तस्य ग्रन्था मनोहराः ॥ २९ ॥
वर्णिता विस्तराद्यत्र रम्यास्ताललयान्विताः ।
मूर्छना ग्रामसहिता नानारससमाश्रयाः ॥ ३० ॥
निषादर्षभगान्धारषड्जमध्यमधैवताः ।
पञ्चमश्च स्वराः सप्त कण्ठतन्त्रीसमुद्भवाः ॥ ३१ ॥
बृहस्पतेरर्थशास्त्रं शुक्रस्यापि च वर्णितम् ।
प्रसिद्धस्यार्थशास्त्रस्य कर्ता कौटिल्य पण्डितः ॥ ३२ ॥

## ज्यौतिषम् ।

ब्रह्मा सूर्यस्ततो व्यासो वशिष्ठोऽत्रिः पराशरः ।
कश्यपो नारदो गर्गो मरीचिर्भृगुरङ्गिराः ॥ ३३ ॥
लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः ।
शौनकोऽष्टादशैवैते ज्योतिःशास्त्रप्रवर्तकाः ॥ ३४ ॥
प्रख्यातार्यभटीयस्य कर्त्ता पाटलिपुत्रके ।
वास्तव्य आर्यभट्टोऽभूत्पञ्चमे शतके बुधः ॥ ३५ ॥

वराहमिहिरोऽवन्त्यां बृहज्जातककृत्कृती ।
पञ्चसिद्धान्तिकाकारः षष्ठे तु शतकेऽभवत् ॥ ३६ ॥
सप्तमे शतके जातौ ख्यातौ ज्योतिर्विदां वरौ ।
ब्रह्मगुप्तस्तथा लल्लाचार्यः सिद्धान्तकोविदौ ॥ ३७ ॥
गोलाध्यायादिगणितग्रन्थकारोऽतिबुद्धिमान् ।
दैवज्ञो भास्कराचार्यो द्वादशे शतकेऽभवत् ॥ ३८ ॥
केशवः श्रीगणेशश्च रामोनारायणस्तथा ।
षोडशे शतकेऽनेके गणका अभवन् बुधाः ॥ ३९ ॥

## व्याकरणम् ।

ब्रह्मा बृहस्पतिश्चेन्द्रो भरद्वाजस्तथैव च ।
आद्याचार्याः समाख्याता व्याकृतेस्तु महर्षयः ॥ ४० ॥
गार्ग्यश्च गालवश्चैवापिशलिः शाकटायनः ।
भारद्वाजश्च शाकल्यः सेनकश्चाक्रवर्मणः ॥ ४१ ॥
स्फोटायनः काश्यपश्च विख्याता मुनयोऽभवन् ।
ग्रन्थकारा व्याकरणे पाणिनेः पूर्ववर्तिनः ॥ ४२ ॥
संस्कृतस्य प्रसिद्धानि स्तुत्यव्याकरणानि च ।
सन्ति द्वादश संख्यानि रचितानि मनीषिभिः ॥ ४३ ॥
ऐन्द्रं बौद्धञ्च जैनं च कातन्त्रं शाकटायनम् ।
चान्द्रं सारस्वतं मुग्धबोधाख्यं चन्द्रिकाभिधम् ॥ ४४ ॥
सौपद्मञ्च तथा हैमं नाना व्याकरणं स्मृतम् ।
तेषु सर्वेष्वतिश्रेष्ठं पाणिनीयं निगद्यते ॥ ४५ ॥
शकाब्दारम्भतः पूर्वं सप्तमे शतकेऽकरोत् ।
रम्यं व्याकरणग्रन्थं विख्यातः पाणिनिर्मुनिः ॥ ४६ ॥
अष्टाध्यायी सूत्रपाठः सर्वव्याकरणोत्तमः ।
गणपाठो धातुपाठः शिक्षा चाप्यतिमञ्जुला ॥ ४७ ॥

उणादिसूत्र-फिट्सत्र-पाठौ लिङ्गानुशासनम् ।
सन्ति तस्य प्रसिद्धानि पाणिनेर्वाग्मिनो मुनेः ॥ ४८ ॥
तथा वार्तिककारोऽपि मुनिः कात्यायनाभिधः ।
ईशवीयाब्दतः पूर्वं चतुर्थे शतकेऽजनि ॥ ४९ ॥
अशेषशास्त्रतत्त्वज्ञो भाष्यकारः पतञ्जलिः ।
शेषावतार एवासीत् योगायुर्वेदशास्त्रकृत् ॥ ५० ॥
षोडशे शतके जातः काश्यां लक्ष्मीधरात्मजः ।
दक्षिणात्यो द्विजश्रेष्ठो भट्टोजीदीक्षितः सुधीः ॥ ५१ ॥
भट्टोजीदीक्षितकृतिः ख्याता सिद्धान्तकौमुदी ।
तेनैव विदुषा रम्यो रचितः शब्दकौस्तुभः ॥ ५२ ॥
भट्टोजीदीक्षितभ्रातृ-रङ्गोजीदीक्षितात्मजः ।
कौण्डभट्टो रचितवान् वैयाकरणभूषणम् ॥ ५३ ॥
शिवभट्ट-सतीपुत्रो नागेशोऽरचयत् प्रधीः ।
वैयाकरणसिद्धान्त-मञ्जूषामतिमञ्जुलाम् ॥ ५४ ॥
तस्यैवास्त्यतिविख्यातः परिभाषेन्दुशेखरः ।
शब्देन्दुशेखरश्चापि पण्डितैरतिसेवितः ॥ ५५ ॥
ख्याता वरदराजस्य मध्यसिद्धान्तकौमुदी ।
तथा बोधाय बालानां लघुसिद्धान्तकौमुदी ॥ ५६ ॥

इति वेदवेदाङ्गवार्ता नाम प्रथमोऽध्यायः ।

# अथ दर्शनवार्ता

अनीश्वराणां विदुषां वेदनिन्दाविधायिनाम् ।
चार्वाक-बौद्ध-जैनानां नास्तिकं दर्शनत्रयम् ॥ १ ॥
न्यायशास्त्रं गौतमस्य प्रमाणादिनिरूपकम् ।
वैशेषिकं कणादस्य पदार्थज्ञानबोधकम् ॥ २ ॥
कपिलस्यातिविख्यातं सांख्यशास्त्रं पुरातनम् ।
तथा पतञ्जलिमुनेर्योगशास्त्रं प्रकीर्तितम् ॥ ३ ॥
मीमांसानामकं शास्त्रं जैमिनेस्तु निगद्यते ।
वेदान्तशास्त्रं व्यासस्य ब्रह्मानन्दप्रदायकम् ॥ ४ ॥
दर्शनानि षडेतानि रचितानि मुनीश्वरैः ।
आस्तिकानि प्रसिद्धानि वैदिकानि मनीषिणाम् ॥ ५ ॥

## चार्वाकदर्शनम्

चार्वाका नास्तिकाः ख्याता वेदनिन्दापरायणाः ।
अधिभूतसुखासक्ता जडा देहात्मवादिनः ॥ ६ ॥
चार्वाकदर्शनाचार्य आसीत् कश्चिद् बृहस्पतिः ।
प्रत्यक्षमात्रविश्वासो नास्तिको वेदनिन्दकः ॥ ७ ॥
चार्वाकनाम्ना दैत्येन दर्शनं तत् प्रचारितम् ।
अतस्तस्याभवन्नाम चारु चार्वाकदर्शनम् ॥ ८ ॥
स्वभावाद् जगदुत्पत्तिर्विनाशश्चापि जायते ।
न स्वर्गो नापवर्गो वा नेश्वरोऽस्त्यत्र दर्शने ॥ ९ ॥

## बौद्धदर्शनम्

शकाब्दारम्भतः पूर्वं सप्तमे शतकेऽजनि ।
बुद्धदेवो महाप्राज्ञो बौद्धधर्मप्रवर्तकः ॥ १० ॥
सिद्धार्थस्तस्य नामासीत् पिता शुद्धोदनोऽभवत् ।
मायादेवी च जननी भार्या ख्याता यशोधरा ॥ ११ ॥

तत्र बौद्धास्तु चत्वारः ख्याताः सौत्रान्तिकाभिधाः ।
योगाचारा माध्यमिकास्तथा वैभाषिकाभिधाः ॥ १२ ॥
प्रधानशिष्याश्चत्वारो बुद्धदेवस्य वर्णिताः ।
बुद्धदेवोपदेशस्तु तेषां मध्ये पुराऽभवत् ॥ १३ ॥
"क्षणिकं क्षणिकं सर्वं दुःखं दुःखं स्वलक्षणम् ।
स्वलक्षणं सर्वभावं शून्यं शून्यं विचारयेत् ॥ १४ ॥"
भावमस्योपदेशस्य स्वस्वबुद्ध्यनुसारतः ।
गृहीतवन्तश्चत्वारः शिष्यास्तस्य महात्मनः ॥ १५ ॥
ज्ञानं ज्ञेयञ्च प्रत्यक्षं द्वयं वैभाषिका विदुः ।
सौत्रान्तिकास्तु ज्ञेयार्थं मन्यन्ते चानुमानतः ॥ १६ ॥
केवलं ज्ञानमेवास्ति योगाचारैः सुसम्मतः ।
सर्वे घटादयो ज्ञेयपदार्था ज्ञानरूपिणः ॥ १७ ॥
ज्ञानं ज्ञेयमुभे शून्ये तयोः सत्ता भ्रमात्मिका ।
शून्यं शून्यमिदं सर्वमिति माध्यमिका विदुः ॥ १८ ॥
हीनयानं महायानमिति बौद्धं मतद्वयम् ।
लोके प्रचारितं प्राज्ञैर्बौद्धधर्मोपदेशकैः ॥ १९ ॥
अहिंसा परमो धर्मो वर्णितो बौद्धदर्शने ।
प्रत्यक्षञ्चानुमानञ्च प्रमाणद्वयमीरितम् ॥ २० ॥
बौद्धैः सर्वेषु भावेषु बाह्येष्वाभ्यन्तरेषु च ।
क्षणिकत्वज्ञानमेवा-त्मतत्त्वज्ञानमुच्यते ॥ २१ ॥
विश्वं दुःखमयं ख्यातं वस्तु सर्वं स्वलक्षणम् ।
प्रामाण्यं परतो ज्ञाने मोक्षश्चात्मलयो मतः ॥ २२ ॥
प्राचीनबौद्धधर्मस्य ग्रन्थाः त्रिपिटकाभिधाः ।
अष्टसाहस्रिकाख्यश्च प्रज्ञा पारमिताभिधः ॥ २३ ॥
नागार्जुनश्च मैत्रेयो वसुबन्धुस्तथैव च ।
दिङ्नागो धर्मकीर्तिश्च बौद्धदार्शनिका मताः ॥ २४ ॥

## जैनदर्शनम्

जैनदर्शनमाख्यातं प्राचीनं बौद्धदर्शनात् ।
शास्त्रेऽस्मिन् अर्हतो भिन्नं नास्ति ब्रह्म नवेश्वरः ॥ २५ ॥
अहिंसा परमो धर्मो जैनदर्शनसम्मतः ।
पिपीलिकाया हत्यापि ब्रह्महत्या समा स्मृता ॥ २६ ॥
जैनास्तीर्थङ्करा आसन् चतुर्विंशतिसंख्यकाः ।
विख्याता धर्ममर्मज्ञा जैनधर्मप्रचारकाः ॥ २७ ॥
आद्यस्तीर्थङ्करः ख्यातो जैनधर्मप्रवर्तकः ।
अभूदृषभदेवाख्यो मुनिर्धर्मपरायणः ॥ २८ ॥
अन्तिमौ द्वावतिख्यातौ पार्श्वनाथाभिधस्तथा ।
महावीराभिधश्चापि जैनधर्मोपदेशकौ ॥ २९ ॥
भद्रबाहुः सिद्धसेनो हरिभद्रस्तथैव च ।
हेमचन्द्रः प्रभाचन्द्रो जैनदार्शनिका मताः ॥ ३० ॥

## न्यायवैशेषिकदर्शने

पदार्थतत्त्वविज्ञानं प्रमाणादिपुरस्सरम् ।
न्याये वैशेषिके चैव साम्येनैवास्ति वर्णितम् ॥ ३१ ॥
गौतमः सूत्रकारोऽभून्न्याये वात्स्यायनो व्यधात् ।
न्यायभाष्यं तथोद्योतो न्यायवार्तिककृन्मतः ॥ ३२ ॥
श्रीवाचस्पतिमिश्रेण मैथिलेन मनीषिणा ।
न्यायवार्तिकतात्पर्यटीका विरचिताद्भुता ॥ ३३ ॥
तथैवोदयनाचार्यो बौद्धानां मतखण्डकः ।
न्यायग्रन्थं रचितवान् कुसुमाञ्जलिनामकम् ॥ ३४ ॥
प्रमेयशास्त्रमाख्यातं प्राचीनं न्यायदर्शनम् ।
प्रमाणशास्त्रन्तु मतं नवीनं न्यायदर्शनम् ॥ ३५ ॥
उपाध्यायस्तु गङ्गेशो मिश्रः पक्षधराभिधः ।
नव्यन्यायस्य कर्तारो भट्टाचार्यो गदाधरः ॥ ३६ ॥

कणादस्य मुनेः ख्यातं शास्त्रं वैशेषिकाभिधम् ।
विशेषा वर्णितो यत्र पदार्थः सर्वतोऽधिकः ॥ ३७ ॥
ईश्वरः सृष्टिकर्तास्ति सर्वकामफलप्रदः ।
कर्माण्यनाद्यनन्तानि त्वज्ञानं दुःखकारणम् ॥ ३८ ॥
इत्यादयस्तु सिद्धान्ताः सूत्रैर्वैशेषिकाभिधैः ।
विशेषतत्त्वाभिज्ञेन कणादेन निरूपिताः ॥ ३९ ॥
प्रशस्तपादरचितं भाष्यं वैशेषिकाभिधम् ।
टीका व्योमवती तस्य व्योमाचार्येण निर्मिता ॥ ४० ॥

## सांख्यदर्शनम्

प्रकृतिः पुरुषश्चैव नित्यौ सांख्ये प्रकीर्तितौ ।
पुरुषा बहवो मूलप्रकृतिस्त्रिगुणात्मिका ॥ ४१ ॥
महदाद्याः प्रकृतयस्तथा विकृतयो मताः ।
सप्तैव षोडशमिता विकारास्तु प्रकीर्तिताः ॥ ४२ ॥
चतुर्विंशतितत्त्वानि सांख्ये प्रोक्तानि सूरिभिः ।
पुरुषः प्रकृतिर्नैव न चापि विकृतिर्मतः ॥ ४३ ॥
अचेतना तु प्रकृतिः पुरुषस्तु सचेतनः ।
तयोः संयोगतः सर्गो जायते त्रिगुणात्मकः ॥ ४४ ॥
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
मोहात् कर्तारमात्मानमकर्तारं च विन्दति ॥ ४५ ॥
निर्लेपः पुरुषो ज्ञात्वा प्रकृतिं विश्वमोहिनीम् ।
मुक्तो भवति ज्ञाता च प्रकृतिर्विजहाति तम् ॥ ४६ ॥
सत्कार्यवादिनः सांख्या परिणामसमर्थकाः ।
द्वैतसिद्धान्तनिष्णाता ईश्वरे मौनमाश्रिताः ॥ ४७ ॥
सांख्यस्य वक्ता कपिलः परमर्षिः पुरातनः ।
व्यक्ताव्यक्तज्ञविज्ञानं सांख्यस्य विषयो मतः ॥ ४८ ॥

कपिलस्य मुनेर्ग्रन्थद्वयं समुपलभ्यते ।
सांख्यप्रवचनं तत्त्वसमासश्चापि विश्रुतः ॥ ४९ ॥
कपिलस्य मुनेः शिष्यः स आसीदासुरिर्मुनिः ।
यस्य शिष्यः पञ्चशिखः षष्ठितन्त्रकरोऽभवत् ॥ ५० ॥
विदुषेश्वरकृष्णेन रचिता सांख्यकारिका ।
या प्राचीनतरा ख्याता सांख्यशास्त्रस्यकारिका ॥ ५१ ॥
यस्याः टीका सांख्यतत्त्व कौमुदीनामिका कृता ।
श्री वाचस्पतिमिश्रेण प्रसिद्धा सांख्यबोधिनी ॥ ५२ ॥
वृत्तिस्तु सांख्यसूत्राणामनिरुद्धेन निर्मिता ।
सांख्यप्रवचनभाष्यन्तु कृतं विज्ञान भिक्षुणा ॥ ५३ ॥

## योगदर्शनम् ।

चित्तवृत्तिनिरोधस्तु योगः प्रोक्तो महर्षिभिः ।
ब्रह्मज्ञानन्तु साष्टाङ्गयोगेनैव प्रजायते ॥ ५४ ॥
सांख्यदर्शनतुल्यस्तु ज्ञानांशोऽस्यास्ति वर्णितः ।
सर्वतो निर्गुणः शान्त ईश्वरोऽप्यत्र वर्णितः ॥ ५५ ॥
योगशास्त्रं समाख्यातं सांख्यशास्त्रस्य पूरकम् ।
क्लेशकर्मविपाकादिरहितेश्वरवर्णनात् ॥ ५६ ॥
योगसूत्रं रचितवान् पतञ्जलिमुनिः पुरा ।
व्यासो मुनिस्तु कृतवान् योगभाष्यमतिप्रियम् ॥ ५७ ॥
टीका वैशारदी नाम्नी योगभाष्यस्य सूरिणा ।
श्रीवाचस्पतिमिश्रेण रचिता विदुषां प्रिया ॥ ५८ ॥
सर्वदर्शनतत्त्वज्ञश्रीमद्विज्ञानभिक्षुणा ।
योगदशनसर्वस्वं रचितं योगवार्तिकम् ॥ ५९ ॥

## मीमांसादर्शनम् ।

मीमांसायां समाख्यातं निःश्रेयसविधायकम् ।
वैदिकं यज्ञयागादि कर्मैवाखिलसिद्धिदम् ॥ ६० ॥

वेदेषु दृश्यमानानां यज्ञयागादि कर्मसु ।
विरोधिवचनानान्तु मीमांसायां समन्वयः ॥ ६१ ॥
मीमांसासूत्रकारोऽभूत्प्राचीनोजैमिनिर्मुनिः ।
उपवर्षो वृत्तिकारो भाष्यकृच्छबरो मुनिः ॥ ६२ ॥
भट्टः कुमारिलो भाट्टमतस्यादिप्रवर्तकः ।
तथा गुरुमतस्यादिराचार्योऽभूत् प्रभाकरः ॥ ६३ ॥
मुरारिमिश्रस्य मतं तृतीयं परिकीर्तितम् ।
एते शाबरभाष्यस्य टीकाकारास्त्रयो मताः ॥ ६४ ॥

## वेदान्तदर्शनम्

वेदान्तदर्शनं सर्वदर्शनश्रेष्ठमुच्यते ।
यत्र ब्रह्मविचारोऽस्ति निःश्रेयसविधायकः ॥ ६५ ॥
ब्रह्मसूत्रं विरचितं वेदव्यासमहर्षिणा ।
कृतानि तस्य भाष्याणि शङ्कराद्यैर्मनोषिभिः ॥ ६६ ॥
तत्राऽद्वैतं तथा द्वैतं विशिष्टाद्वैतसंज्ञितम् ।
द्वैताद्वैतं तथा शुद्धाद्वैतादिमतमीरितम् ॥ ६७ ॥
पूज्याः श्रीशङ्कराचार्यो मान्या रामानुजास्तथा ।
निम्बार्काचार्यचरणा मध्वाचार्यमहोदयाः ॥ ६८ ॥
वल्लभाचार्यपादाश्च भाष्यकाराः प्रकीर्तिताः ।
ते प्रस्थानत्रयीभाष्यं स्वमतेन प्रचक्रिरे ॥ ६९ ॥
अद्वैतं शाङ्करे भाष्ये शुद्धाद्वैतं तु वाल्लभे ।
रामानुजीये श्रीभाष्ये विशिष्टाद्वैतमीरितम् ॥ ७० ॥
माध्वभाष्ये द्वैतमतं पूर्णरूपेण वर्णितम् ।
निम्बार्काचार्यभाष्ये तु द्वैताद्वैतं निरूपितम् ॥ ७१ ॥
एते महान्त आचार्याः शङ्कराद्या मनीषिणः ।
स्वमतं बोधयामासुः स्वस्वभाष्यैः प्रमाणतः ॥ ७२ ॥

वस्तुतस्त्वद्वयं ब्रह्म जगज्जीवेश्वरात्मकम् ।
वेदवेदान्तसिद्धान्त-सच्चिदानन्दमक्षरम् ॥ ७३ ॥
यतो वाचो निवर्तन्ते न प्राप्य मनसा सह ।
तदेकमव्ययं ज्ञेयं ज्ञानं ज्ञेतृ परात्परम् ॥ ७४ ॥
वेदान्तस्योपनिषदो मूलमित्युच्यते बुधैः ।
प्राधान्यं कर्मतो यत्र ज्ञानस्यैवास्ति वर्णितम् ॥ ७५ ॥
विद्या तु द्विविधा प्रोक्ता परा चैवापराभिधा ।
विद्याऽपरान्यशास्त्रीया वेदान्तीया परामता ॥ ७६ ॥

इति दर्शनवार्ता नाम द्वितीयोऽध्यायः ।

---

## अथ काव्यालङ्कारवार्ता ।

समस्तवाङ्मयग्रन्थाभिधेयोऽप्यभिधीयते ।
साहित्यशब्दः प्रायेण काव्यालङ्कारबोधकः ॥ १ ॥
काव्यं रसात्मकं वाक्यं गुणालङ्काररीतिमत् ।
वक्रोक्तिध्वनिसंयुक्तमौचित्येन विराजितम् ॥ २ ॥
'रसो वै स' इति श्रुत्योपनिषत्सु महर्षयः ।
जानन्ति स्म रसं ब्रह्म सच्चिदानन्दमद्वयम् ॥ ३ ॥
काव्यस्यात्मा रसः ख्यातोऽलङ्कारो रीतिरेव वा ।
वक्रोक्तिर्वा ध्वनिर्वापि काव्यतत्त्वानुसन्धिभिः ॥ ४ ॥
रसालङ्काररीतीनां सम्प्रदायास्त्रयोऽभवन् ।
वक्रोक्तिसम्प्रदायश्च सम्प्रदायो ध्वनेस्तथा ॥ ५ ॥
रसाख्यसम्प्रदायस्या-द्याचार्यो भरतो मुनिः ।
तथालङ्कारमार्गस्या-द्याचार्यो भामहोऽभवत् ॥ ६ ॥

वामनो रीतिमार्गस्य मुख्याचार्यस्तु वर्णितः ।
वक्रोक्तिसम्प्रदायस्य मुख्याचार्यस्तु कुन्तकः ॥ ७ ॥
आनन्दवर्धनाचार्यस्तथाभिनवगुप्तकः ।
ध्वनेस्तु सम्प्रदायस्य प्राचार्यौ परिकीर्तितौ ॥ ८ ॥
पञ्चैवेते सम्प्रदायाः काव्यशास्त्रस्य वर्णिताः ।
काव्यालङ्कारशास्त्रज्ञैर्मार्मिकैः कविपुङ्गवैः ॥ ९ ॥
सर्वेषु काव्यसारेषु रसध्वनिगुणादिषु ।
काव्याचार्यैः (क्षेमेन्द्रेण) समादिष्टं युक्त्यौचित्यस्य पालनम् ॥१०॥
उचितं तत्समाख्यातं सदृशं यस्य यद्भवेत् ।
उचितस्य च यो भावस्तदौचित्यं निगद्यते ॥ ११ ॥
शब्दैरर्थैस्तथा वाक्यैरुचितैः सगुणै रसैः ।
वक्रोक्त्या ध्वनिना रीत्या काव्यं भवति सुन्दरम् ॥ १२ ॥
काव्यादर्थश्च कामश्च धर्मो मोक्षश्च जायते ।
तस्मात् काव्यं समाख्यातं सर्वानन्दविधायकम् ॥ १३ ॥
आसीन्महाकाव्यकारो वैयाकरणपाणिनिः ।
श्रूयते तेन रचितं काव्यं जाम्बवतीजयम् ॥ १४ ॥
अष्टाध्यायीसूत्रकारो दाक्षीपुत्रः स पाणिनिः ।
कृत्वा व्याकरणं पश्चान्महाकाव्यमपि व्यधात् ॥ १५ ॥
तथा वररुचिः कात्यायनो वार्तिककृत् कृती ।
आसीद्यस्य श्रुतं काव्यं कण्ठाभरणनामकम् ॥ १६ ॥
मुनिः पतञ्जलिश्चापि भाष्यकारोऽभवत् कविः ।
परन्तु तेषां काव्यानि लभ्यन्ते नैव साम्प्रतम् ॥ १७ ॥
वाल्मीकिर्व्यासदेवश्च कालिदासो महाकविः ।
कादम्बरीकथाकारो बाणभट्टकविस्तथा ॥ १८ ॥
भारविर्भवभूतिश्च दण्डी माघः कवीश्वरः ।
श्रीहर्षश्चैव कविषु नवरत्नानि भूतले ॥ १९ ॥

## वाल्मीकि-रामायणम् (ई० पू० ६००)

ईशवीयाब्दतः पूर्वं वाल्मीकिमुनिना पुरा।
षष्ठ्यां शताब्द्यां रचितं रामायणकथामृतम्॥ २०॥
वाल्मीकिरेवाद्यकवि विख्यातो जगतीतले।
रामायणञ्चादिकाव्यं चतुर्वर्गफलप्रदम्॥ २१॥
अयोध्याकाण्डतो युद्धकाण्डान्तम्पूर्वनिर्मितम्।
बालोत्तराभिधे काण्डे पश्चात् तत्र निवेशिते॥ २२॥
रामायणसमो ग्रन्थः कोऽपि नान्यो महीतले।
राजनीतिमयोधर्ममयो ज्ञानप्रदीपकः॥ २३॥
पत्युः पत्न्या गुरोर्भ्रातुः सख्युः पित्रोः सुतस्य च।
प्रजानाञ्च नृपाणाञ्च धर्मास्तत्र प्रदर्शिताः॥ २४॥
चतुर्विंशतिसाहस्री संहिता प्रोच्यते बुधैः।
वाल्मीकिना विरचिता रम्या रामायणी कथा॥ २५॥
तत्रत्यं सुन्दरं काण्डममन्दानन्दमन्दिरम्।
मारुतेश्चरितं यत्र वर्णितं परमाद्भुतम्॥ २६॥

## व्यासदेव-महाभारतम्। (ई० पू० ५००)

ईशवीयाब्दतः पूर्वं पञ्चमे शतकेऽकरोत्।
व्यासो महाभारताख्यमितिहासम्पुरातनम्॥ २७॥
लक्षश्लोकात्मके ग्रन्थे नानोपाख्यानसंयुते।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥ २८॥
वाल्मीकिनामसहिता तत्र रामकथाप्यते।
अतोऽभूत् तस्य रचना पश्चाद् रामायणाद् ध्रुवा॥ २९॥
आद्यं नाम तु तस्यासीद् व्यासस्य समये जयः।
वैशम्पायनतो जातं द्वितीयं नाम भारतम्॥ ३०॥
रोमहर्षणपुत्रेण सौतिना वर्धितस्य तु।
तृतीयं नाम तस्यैव महाभारतमित्यभूत्॥ ३१॥

जयश्च भारतञ्चैव प्राचीने नात्र संशयः।
पश्चान्महाभारताख्यो ग्रन्थोऽभूदतिविस्तृतः॥ ३२॥
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च।
आसन् जयाभिधे ग्रन्थे व्यासदेवविनिर्मिते॥ ३३॥
चतुर्विंशति साहस्री व्यासभारतसंहिता।
उपाख्यानैर्विना तावत् प्रोच्यते भारतं बुधैः॥ ३४॥
पाश्चात्यानां हि विदुषां मतमेतदुदीरितम्।
प्राच्यास्तु नाङ्गीकुर्वन्ति मतमेषां विपश्चितः॥ ३५॥
जयाख्यो भारताख्यश्च महाभारतनामकः।
एक एवादितो ग्रन्थः प्राच्यानां विदुषां मते॥ ३६॥
लक्षश्लोकमयी श्रीमन्महाभारतसंहिता।
नानोपाख्यानसहिता व्यासेन रचिता स्वयम्॥ ३७॥
आदिपर्व सभापर्व वनपर्व तथा विराट्—
उद्योग-भीष्म-द्रोणाख्य-कर्ण-शल्याभिधानि षट्॥ ३८॥
सौप्तिकंपर्व स्त्रीपर्व शान्तिपर्वानुशासनम्।
अश्वमेधाश्रमावास-मौशलानि तथैव च॥ ३९॥
महाप्रास्थानिकं स्वर्गारोहणञ्च यथाक्रमम्।
इत्यष्टादशपर्वाणि विद्यन्तेऽखिलभारते॥ ४०॥
भीष्मपर्वस्थिता गीता सांख्ययोगप्रकाशिका।
श्रीमन्महाभारतस्य रत्नमेवाभिधीयते॥ ४१॥
गीतोपनिषदध्यात्मज्ञानप्रोज्ज्वलदीपिका।
ब्रह्मविद्यानवद्यास्ति मुक्तिद्वारप्रकाशिका॥ ४२॥

## भरतमुनिः।

शकाब्दारम्भतः पूर्वं चतुर्थे शतकेऽभवत्।
निर्माता नाट्यशास्त्रस्य प्रसिद्धो भरतो मुनिः॥ ४३॥
(ई० पू० ४००)

## भासः ।

शकाब्दारम्भतः पूर्वं तृतीये शतकेऽभवत् ।
रूपकाणां रचयिता भासो नाम महाकविः ॥ ४४ ॥
तस्य त्रयोदशग्रन्था मिलिता अतिसुन्दराः ।
स्वप्नवासवदत्ताख्यं विख्यातं तेषु नाटकम् ॥ ४५ ॥
रुचिरं बालचरितं नाटकं तस्य वर्णितम् ।
ख्याता प्रतिज्ञायौगन्ध-रायणाख्या च नाटिका ॥ ४६ ॥
प्रतिमा चाभिषेकश्च पञ्चरात्रं तथैव च ।
दूतवाक्यं कर्णभारो वर्ण्यन्ते विदुषां वरैः ॥ ४७ ॥
कालिदासेन कविना बाणेनापि च सादरम् ।
प्राचीनत्वेन निर्दिष्टं नाम तस्य महाकवेः ॥ ४८ ॥

(ई० पू० ३०० )

## शूद्रकः ।

ईशवीयाब्दतः पूर्वं द्वितीये शतकेऽलिखत् ।
शूद्रको मृच्छकटिकं रम्यं प्रकरणं नृपः ॥ ४९ ॥
भासस्य चादत्ताख्यरूपकस्यानुसारतः ।
रचितं मृच्छकटिकं विदिशेशेन भूभुजा ॥ ५० ॥

(ई० पू० १५० )

## रामिल-सौमिलौ ।

नित्यं सहचरौ दस्राविव काव्यकलानिधी ।
नाटकाचार्यरूपेण सूक्तिग्रन्थेषु वर्णितौ ॥ ५१ ॥
तौ शूद्रककथाकारौ वन्द्यौ रामिल-सौमिलौ ।
ययोर्द्वयोः काव्यमासीदर्धनारीश्वरोपमम ॥ ५२ ॥
सौमिलः कालिदासेन कविनापि प्रशंसितः ।
क आसीदिति निश्चेतुं सुशकं न मनीषिभिः ॥ ५३ ॥

न शूद्रककथा नापि सुप्रबन्धान्तरं तयोः ।
प्रयत्नेनापि महता विद्वद्भिर्लभ्यतेऽधुना ॥ ५४ ॥

## कालिदासः । (ई० पू० १००)

ईशवीयाब्दतः पूर्वं प्रथमे शतकेऽभवत् ।
विक्रमादित्यसमये कालिदासः कवीश्वरः ॥ ५५ ॥
मन्दसूरशिलालेखे पञ्चमे शतके कृते ।
कालिदासीयकवितानुकृतिर्बुध्यते बुधैः ॥ ५६ ॥
आयहोलशिलालेखे सप्तम शतके कृते ।
दृश्येते नामनी कालि-दासस्यापि च भारवेः ॥ ५७ ॥
बाणभट्टेन रचिते श्रीहर्षचरिते तथा ।
दृश्यते वर्णनं श्रीमत्कालिदासमहाकवेः ॥ ५८ ॥
कश्चिद् विपश्चित्पाश्चात्यः फार्ग्यूसन महोदयः ।
कालिदासस्य काव्ये तु दृष्ट्वा हूणपराजयम् ॥ ५९ ॥
हूण जेतुर्यशोधर्मनृपतेः समये कवेः ।
कालिदासस्य समयं षष्ठे तु शतकेऽब्रवीत् ॥ ६० ॥
परन्तु स नृपो नासीद् विक्रमादित्यनामकः ।
संवत्प्रवर्तको नापि तस्माच्चिन्त्यं तु तन्मतम् ॥ ६१ ॥
ऐतिहासिक विद्वांसः स्मिथ-मैक्डौनलादयः ।
कालिदासस्य समयं चतुर्थं शतकं विदुः ॥ ६२ ॥
द्वितीय विक्रमादित्य-चन्द्रगुप्तमहीपतेः ।
समसामयिकं ते तु कालिदासं प्रचक्षते ॥ ६३ ॥
चतुर्थशतके जातो कालिदासो भवेद् यदि ।
स स्वकाव्येऽश्वघोषस्य नामावश्यं विनिर्दिशेत् ॥ ६४ ॥
द्वितीयशतके जाते नाश्वघोषेण चेोज्झितम् ।
स्वकाव्ये बुद्धचरिते कालिदासरसामृतम् ॥ ६५ ॥

स्वकीये सौन्दरानन्दे चाश्वघोषेण सूरिणा।
प्रायशः कालिदासीयकवितानुकृतिः कृता ॥ ६६ ॥
द्वितीये शतके पूर्वं विक्रमादित्यवत्सरात्।
अग्निमित्राभिधो राजासीत् प्रसिद्धोऽतिधार्मिकः ॥ ६७ ॥
प्रथमे शतके तस्मादुचितं तस्य वर्णनम्।
कालिदासेन कविना स्वकीये नाटके कृतम् ॥ ६८ ॥
विस्मृतस्याग्निमित्रस्य चतुर्थे शतके जनैः।
राज्ञोऽतिवर्णनं तस्य नाटके न प्रियं भवेत् ॥ ६९ ॥

विक्रमाब्दसमारम्भ एव कालोऽस्ति निश्चितः।
भारतीयैर्विपश्चिद्भिः कालिदासमहाकवेः ॥ ७० ॥
वीलियम्‌जोन्सनामापि ख्यातः पाश्चात्यपण्डितः।
प्रथमे शतके कालं कालिदासस्य मन्यते ॥ ७१ ॥
कुमारसम्भवाभिख्यं रघुवंशाभिधन्तथा।
महाकाव्यद्वयं तस्य रसालङ्कारभासुरम् ॥७२॥
मेघदूतर्तुसंहारौ खण्डकाव्यद्वयं मतम् ॥
मेघदूतसमं खण्डकाव्यमन्यन्न लभ्यते ॥ ७३ ॥
शाकुन्तलं मालविकाग्निमित्रं विक्रमोर्वसी—
नामकं सरसं हृद्यं तदीयं रूपकत्रयम् ॥ ७४ ॥
वैदर्भीरीतिरुचिरा प्रसादगुणभूषिता।
नानालङ्काररसंयुक्ता सरसामधुरा प्रिया ॥ ७५ ॥
कालिदासस्य कविता सर्वोत्कृष्टा विराजते।
उपमालङ्कृतिस्तत्र सर्वश्रेष्ठा निगद्यते ॥ ७६ ॥

सरस्वत्याः प्रसादेन सर्वकाव्यकलानिधिः।
कविताकामिनीकान्तः कालिदासः स वर्णितः ॥ ७७ ॥
पश्चादनेके कवयः कालिदासाभिधाः स्मृताः।
त्रयस्तेष्वतिविख्याता विक्रमादित्यभूपवत् ॥ ७८ ॥

सूक्तिमुक्तावली ग्रन्थे राजशेखरनिर्मिते ।
नवमे शतके पद्य मधःस्थं परिदृश्यते ॥ ७९ ॥
"एकोऽपि जीयते हन्त कालिदासो न केन चित् ॥
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ॥ ८० ॥

## अमरसिंहः ।

विक्रमादित्यनृपतेः समसामयिको बुधः ।
निर्मातामरकोशस्यामरसिंहोऽभवत् कविः ॥ ८१ ॥

## हालकविः ( शातवाहनः ) । ( ई० १०० )

प्रथमे शतके हालकविना तुलकीर्तिना ।
गाथासप्तशतीकाव्यं कृतं प्राकृतभाषया ॥ ८२ ॥

## विष्णुशर्मा । ( ई०२०० )

मन्वादिधर्मशास्त्राणं वेत्ता कौटिल्यनीतिवित् ।
दाक्षिणात्ये जनपदे विष्णुशर्माभवद् बुधः ॥ ८३ ॥
द्वितीये शतके राजपुत्राध्ययनहेतवे ।
पञ्चतन्त्रं विरचितं विदुषा विष्णु शर्मणा ॥ ८४ ॥

## अश्वघोषः । ( ई० २०० )

अश्वघोषेण कविना कालिदासानुकारिणा ।
द्वितीये शतकेऽलेखि काव्यद्वयमतिप्रियम् ॥ ८५ ॥
तदीयं बुद्धचरितं महाकाव्यं मनोहरम् ।
तथा सौन्दरनन्दाख्यं बौद्धधर्मामृताप्लुतम् ॥ ८६ ॥
पाटलीपुत्रवास्तव्यो बौद्धो दार्शनिकः सुधीः ।
ख्यातो विद्वान् स्वसमये सोऽश्वघोषाभिधोऽभवत् ॥ ८७ ॥
बौद्धधर्मोपदेशार्थं सत्कृत्य स महाकविः ।
राज्ञा नीतः कनिष्केण पेशावरपुरं कृती ॥ ८८ ॥

## आर्यशूरः । ( ई० ४०० )

आर्यशूरेण रचिता चतुर्थे शतके पुरा ।
पद्यैर्जातकमालाख्या कथा बौद्धैः समादृता ॥ ८९ ॥

## शिवदासः ।

शिवदासस्य वेतालपञ्चविंशति-नामिका ।
कथा लोकेषु विख्याता तथा द्वात्रिंशिकाभिधा ॥ ९० ॥

## अनन्तभट्टः ।

अनन्तभट्टेन कृतः पञ्चोपाख्यानसंग्रहः ।
नागभट्टस्य पुत्रेण कण्व गोत्रोद्भवेन च ॥ ९१ ॥

## भामहः । ( ई० ४०० )

चतुर्थे शतकेऽकारि भामहेन मनीषिणा ।
ग्रन्थोऽलङ्कारशास्त्रस्य काव्यालङ्कारनामकः ॥ ९२ ॥

## मेण्ठकविः । ( ई० ५०० )

पञ्चमे शतके जातो भर्तृमेण्ठो महाकविः ।
हयग्रीववधन्तस्य महाकाव्यमभूत् पुरा ॥ ९३ ॥
काश्मीराधिपतिः श्रीमान् मातृगुप्तो महीपतिः ।
तुतोषातितरां श्रुत्वा तत्काव्यमतिसुन्दरम् ॥ ९४ ॥
कल्हणस्य कवे राज-तरंगिण्यां सुवर्णितः ।
भर्तृमेण्ठो हयग्रीववधकृत् कविशेखरः ॥ ९५ ॥
धनपालेन लिखितं प्रशंसायां महाकवेः ।
तस्यैव भर्तृमेण्ठस्य पद्यरत्नमधःस्थितम् ॥ ९६ ॥
"वक्रोक्त्या मेण्ठराजस्य वहन्त्या सृणिरूपताम् ।
आविद्धा इव धुन्वान्ति मूर्धानं कविकुञ्जराः ॥ ९७ ॥"

## सुबन्धुः । ( ई० ५०० )

वक्रोक्तिमार्गचतुरः सुबन्धुर्गद्यकाव्यकृत् ।
कथां वासवदत्ताख्यां पञ्चमे शतकेऽलिखत् ॥ ९८ ॥
"सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः ।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा ॥ ९९ ॥

## भट्टारहरिचन्द्र । ( ई० ५०० )

भट्टारहरिचन्द्रोऽभूद्गद्यकाव्यकविः पुरा ।
बाणस्य हर्षचरिते यस्य नामोपलभ्यते ॥ १०० ॥
एकादशे तु शतके हरिचन्द्रोऽन्य एव च ।
धर्मशर्माभ्युदयकृन्महाकविरजायत ॥ १०१ ॥

## भारविः ( ई० ६०० )

कवीन्द्रो भारविः षष्ठशताब्द्यां समजायत ।
काव्यं किरातार्जुनीयं विख्यातं तस्य भूतले ॥ १०२ ॥
महाकवीनां गणना प्रसङ्गेऽस्य महाकवेः ।
गणना क्रियते प्राज्ञैः कालिदासादनन्तरम् ॥ १०३ ॥
विष्णुवर्धनभूपस्य माननीयः सभापतिः ।
आसीत् पल्लवराजस्य पूजितः स महाकविः ॥ १०४ ॥
भारवेरपरं नाम श्रीदामोदरपण्डितः ।
पिता नारायणः स्वामी वासोऽचलपुरेऽभवत् ॥ १०५ ॥
सदुक्तिरत्नखचितं चार्थगाम्भीर्यभूषितम् ।
मनोहरं महाकाव्यमस्य प्राज्ञैर्निगद्यते ॥ १०६ ॥

## बाणभट्टः । (ई० ७०० )

हर्षवर्धनभूपस्य समयेऽभून्महाकविः ।
बाणभट्टश्चित्रभानोः पुत्रो वात्स्यायनान्वये ॥ १०७ ॥
रचितं तेन कविना श्रीहर्षचरिताभिधम् ।
गद्यकाव्यं तथा तस्य ख्याता कादम्बरी कथा ॥ १०८ ॥

कादम्बर्यो पूर्वभागो बाणेन रचितस्ततः ।
भूषणेनान्त्यभागस्तु तत्पुत्रेण समापितः ॥ १०९ ॥
सहर्षचरितारब्धाद्भुतकादम्बरी कथा ।
बाणस्य वाण्यनार्येव स्वच्छन्दा भ्रमति क्षितौ ॥ ११० ॥
युक्तं कादम्बरीं श्रुत्वा कवयो मौनमाश्रिताः ।
बाणध्वनावनध्यायो भवतीति श्रुतिर्यतः ॥ १११ ॥

### मयूरः । ( ई० ७०० )

मयूरशतकं नाम सूर्यस्तोत्रं विनिर्मितम् ।
गौडीरीत्या मयूरेण कविना हर्षसेविना ॥ ११२ ॥

### हर्षवर्धनः । ( ई० ६०५–६५० )

श्रीहर्षवर्धनं नृपः प्रभाकरनृपात्मजः ।
श्रीराज्यवर्धननृपानुजः स्थानेश्वराधिपः ॥ ११३ ॥
बाणभट्टमयूरादिकवीनामाश्रयो वशी ।
बौद्धधर्मरतिर्धीरः सप्तमे शतकेऽभवत् ॥ ११४ ॥
रत्नावली नाटिका च नाटिका प्रियदर्शिका ।
नागानन्दाभिधानञ्च नाटकं जनताप्रियम् ॥ ११५ ॥
दृश्यकाव्यत्रयमिदं सकलानन्दवर्धनम् ।
हर्षेण रचितं हर्षात् कविवर्येण भूभुजा ॥ ११६ ॥

### कुमारदासः ( ई० ७०० )

कुमारदासकविना लङ्काधिपतिना कृतम् ।
जानकीहरणं नाम महाकाव्यं मनोहरम् ॥ ११७ ॥
"जानकी हरणं कर्तुं रघुवंशे स्थिते सति ।
कविः कुमारदासो वा रावणो वा यदि क्षमः ॥ ११८ ॥"

### शङ्कराचार्यः । ( ई० ७०० )

वेदान्तविन्महाचार्यो ब्रह्मज्ञः शङ्कराभिधः ।
नाना स्तोत्राण्यरचयद् विवर्ताध्यासभास्करः ॥ ११९ ॥

भाष्यकृद्ब्रह्मसूत्राणां दशोपनिषदां तथा ।
गीतायाश्चापि विख्यातः सप्तमे शतकेऽभवत् ॥ १२० ॥

## अमरुकः ।

शङ्कराचार्यसमये कविनामरुणा कृतम् ।
अमरोः शतकं खण्डकाव्यं शृङ्गारसुन्दरम् ॥ १२१ ॥

## पुष्पदन्तः । ( ई० ७०० )

पुष्पदन्तेन रचितं महिम्नः स्तोत्रमुत्तमम् ।
शिवस्य पठ्यते भक्त्या नित्यं भक्तिपरायणैः ॥ १२२ ॥

## भट्टिकविः । ( ई० ७०० )

राज्ञः श्रीधरसेनस्य वलभीमस्य पूजितः ।
भट्टिनामा कविरभूत् सप्तमे शतके कृती ॥ १२३ ॥
भट्टिना रावणवधाभिख्यं व्याकरणात्मकम् ।
भट्टिकाव्यं विरचितं वलभीमधिवासिना ॥ १२४ ॥

## भर्तृहरिः । ( ई० ७०० )

नीतिशृङ्गारवैराग्य संज्ञकं शतकत्रयम् ।
सप्तमे शतके राज्ञा श्रीभर्तृहरिणा कृतम् ॥ १२५ ॥
कर्ता वाक्यपदीयस्य शब्दब्रह्मनिरूपकः ।
शैवोऽपि विष्णुशिवयोरभेदप्रतिपादकः ॥ १२६ ॥
श्री भर्तृहरिरेवासीद्भाष्यटीकाविधायकः ।
वेदान्ततत्त्ववित् प्राज्ञो वैयाकरणपुङ्गवः ॥ १२७ ॥
यद्ययं ज्येष्ठभ्रातास्यात् विक्रमादित्यभूपतेः ।
तदा श्रीकालिदासस्य समसामयिको भवेत् ॥ १२८ ॥

## वाक्पतिराजः । ( ई० ७०० )

ख्यातं प्राकृतभाषायां काव्यं गौडवधाभिधम् ।
कविवाक्पतिराजेन सप्तमें शतके कृतम् ॥ १२९ ॥

## दण्डी कविः । ( ई० ७०० )

सप्तमे शतके जातो दण्डी नाम महाकविः ।
काञ्चीपुरी निवासस्तथ्यो गद्यकाव्य कलापटुः ॥ १३० ॥

वीरदत्तोऽस्य जनको गौरी तु जननी मता ।
प्रपौत्रो भारविकवेरयमित्युच्यते बुधैः ॥ १३१ ॥
काव्यालङ्कारविषये विद्वज्जनमनोरमः ।
काव्यादर्शाभिधो ग्रन्थो दण्डिना कारि सूरिणा ॥ १३२ ॥

रम्यं दशकुमाराणाञ्चरितं प्रीतिवर्धनम् ।
गद्यकाव्यञ्च तस्यैव रचितं चारु विश्रुतम् ॥ १३३ ॥
छन्दो विचिति नामा च छन्दोग्रन्थस्तुनीयकः ।
कथा वावन्तिसुन्दर्याः श्रूयतेऽस्य महाकवेः ॥ १३४ ॥
स्वजीवनस्य चरमे भागे वेदान्ततत्त्ववित् ।
संन्यासधर्मं स्वीकृत्य दण्डो स्वाम्यभवत् कविः ॥ १३५ ॥

## माघः । ( ई० ७०० )

सप्तमे शतके माघो महाकविरजायत ।
शिशुपालवधन्तस्य महाकाव्यम्प्रकीर्तितम् ॥ १३६ ॥
पौत्रः सुप्रभदेवस्य पुत्रोऽयं दत्तकस्य च ।
श्रीमालपुर्यां संजातो देशे गुर्जरनामके ॥ १३७ ॥
राजनीतिविदां श्रेष्ठः सर्वदर्शनपारगः ।
काव्यालङ्कारसारज्ञो माघनामा कवीश्वरः ॥ १३८ ॥
भारवीयमहाकाव्यानुकृत्या रचना कृता ।
शिशुपालवधस्यात्र सन्देहो नैव विद्यते ॥ १३९ ॥
"उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥ १४० ॥

## भट्टनारायणः ( ई० ७०० )

भट्टनारायणाख्योऽभूत् सप्तमे शतके कविः ।
यो वङ्गदेशमानीत आदिसूरेण भूभृता ॥ १४१ ॥
कान्यकुब्जात् द्विजश्रेष्ठैश्चतुर्भिरपरैः सह ।
सत्कृतः पूजितः प्रीत्या वङ्गदेशाधिपेन च ॥ १४२ ॥
प्रसिद्धं नाटकन्तस्य वेणीसंहारनामकम् ।
यत्र भीमप्रतिज्ञाया विस्तराद् वर्णनं कृतम् ॥ १४३ ॥

## विज्जकाद्याः स्त्रीकवयः ।

सूक्तीनां स्मरकेलीनां कलानाञ्च विलासभूः ।
स्त्रीकविर्विज्जका नाम्नी विजयाङ्का पुरा भवत् ॥ १४४ ॥
चन्द्रादित्यस्य नृपते राज्ञ्यासोत् विज्जका प्रिया ।
सप्तमे शतके ख्याता काव्यालङ्कारचन्द्रिका ॥ १४५ ॥
विज्जकारचितं कौमु—दीमहोत्सवनामकम् ।
नाटकं प्रोच्यते कैश्चिदैतिहासिकपण्डितैः ॥ १४६ ॥
शीलाभट्टारिका विद्या मारुला मोरिका तथा ।
वृहन्नितम्बा सीता च प्रभुदेवी प्रियंवदा ॥ १४७ ॥
सुभद्रा कामलीलाख्या सुनन्दा कनकावली ।
वैजयन्ती त्रिवेणी च लक्ष्मीः पद्मावती तथा ॥ १४८ ॥
मधुराङ्गी चेन्दुलेखा भवदेवी मदालसा ।
एताः स्त्रीकवयः ख्याता विंशतिः काव्यकृद्वराः ॥ १४९ ॥

## भवभूतिः । ( ई० ८०० )

अष्टमे शतके जातो भवभूतिः कवीश्वरः ।
गोत्रेण काश्यपः ख्यातः श्रीकण्ठपदलांछनः ॥ १५० ॥
गोपालभट्टपुत्रोऽस्य नीलकण्ठः पिताभवत् ।
जातुकर्णी तु जननी विदर्भे च जनिर्मता ॥ १५१ ॥

श्रीमहावीरचरितं मालतीमाधवन्तथा ।
उत्तरं रामचरितं तदीयं नाटकत्रयम् ॥ १५२ ॥
करुणाख्ये रसे ख्याते नाटकेषु विचक्षणैः ।
उत्तरं रामचरितं सर्वश्रेष्ठं निगद्यते ॥ १५३ ॥
कालिदासेनास्य तुलां कुर्वन् कोऽप्यलिखत् कविः ।
'उत्तरे रामचरिते भवभूतिर्विशिष्यते' ॥ १५४ ॥

## वामनः । ( ई० ८०० )

काश्मीरराजस्य जयापीडस्य नृपतेरसौ ।
सन्मन्त्री राजनीतिज्ञो वामनाख्योऽभवत् कविः ॥ १५५ ॥
काव्यालङ्कारसूत्राख्यो ग्रन्थो रीतिसमर्थकः ।
अष्टमे शतकेऽलेखि वामनेन मनीषिणा ॥ १५६ ॥

## कविराजः । ( ई० ८०० )

अष्टमे शतकेऽकारि कविराजविपश्चिता ।
द्व्यर्थकं सरसं खण्डकाव्यं राघवपाण्डवम् ॥ १५७ ॥

## शिवस्वामी । ( ई० ९०० )

काश्मीरब्राह्मणः ख्यातः शिवस्वामी महाकविः ।
महाकाव्यं रचितवान् कप्फिणाभ्युदयाभिधम् ॥ १५८ ॥

## विशाखदत्तः । ( ई० ९०० )

नवमे शतके जातो महाराजपृथोः सुतः ।
श्रीवटेश्वरदत्तस्य पौत्रो नीतिविदांवरः ॥ १५९ ॥
कविर्विशाखदत्ताख्यः कवितावनिताप्रियः ।
रचितं तेन विदुषा मुद्राराक्षसनाटकम् ॥ १६० ॥
मौर्यस्य चन्द्रगुप्तस्य राज्याप्तिस्तत्र वर्णिता ।
नन्दानां नाशसहिता चाणक्यस्योपदेशतः ॥ १६१ ॥
प्राधान्येनानुभूयेते तत्र वीराद्भुतौ रसौ ।
चाणक्यनीतिविज्ञानं पठनात् तस्य जायते ॥ १६२ ॥

## आनन्दवर्धनः । ( ई० ९०० )

आनन्दवर्धनाचार्यो ध्वनिमार्गप्रवर्तकः ।
ध्वन्यालोकस्य कर्ताऽभून्नवमे शतके कविः ॥ १६३ ॥
"ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना ।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः" ॥ १६४ ॥
मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः ।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ॥ १६५ ॥

## रत्नाकरः । ( ई० ९०० )

नवमे शतके रम्यं पञ्चाशत्सर्गभूषितं विपुलम् ।
रत्नाकरेण रचितं हरविजयाख्यं महाकाव्यम् ॥ १६६ ॥

## अभिनन्दः । ( ई० ९०० )

जयन्तभट्टपुत्रेणाभिनन्द कविना कृतः ।
कादम्बरी कथासारो नवमे शतके मतः ॥ १६७ ॥

## अभिनवगुप्तः । ( ई० ९०० )

ध्वन्यालोकस्य या टीका लोचनाख्यातिविश्रुता ।
तस्याः कर्ता महाचार्यः शैवो दार्शनिकः कविः ॥ १६८ ॥
बुधोऽभिनवगुप्ताख्यो नवमे शतकेऽभवत् ।
अनेकग्रन्थनिर्माता काश्मीरः कविकुञ्जरः ॥ १६९ ॥

## मुरारिः । ( ई० ९०० )

नवमे शतके श्रीमन्मुरारिकविना कृतम् ।
अनर्घराघवं नाम नाटकं कविभिर्नुतम् ॥ १७० ॥
प्रारभ्य विश्वामित्रस्य यज्ञस्य परिरक्षणात् ।
रामस्य राज्यपर्यन्ता कथा यत्रास्ति वर्णिता ॥ १७१ ॥

## राजशेखरः। ( ई० ९०० )

नवमे शतके जातः कविः श्रीराजशेखरः।
कविराजो बालकविः कविताव्रनकेसरी ॥ १७२ ॥
दुर्दुको जनकोऽस्यासीत् माता शीलवती सती।
अवन्ति सुन्दरी भार्या महती विदुषो प्रिया ॥ १७३ ॥
राज्ञो महेन्द्रपालस्य कान्यकुब्जेश्वरस्य सः।
गुरुरासीत् पूज्यतमो यायावरकुलोद्भवः ॥ १७४ ॥
बालरामायणन्तस्य विख्यातं नाम नाटकम्।
कर्पूरमञ्जरी नाम सट्टकञ्चातिविश्रुतम् ॥ १७५ ॥
तस्यैव काव्यमीमांसातिख्याता पठ्यते बुधैः।
अन्येऽपि विविधा ग्रन्थाः कविना तेन निर्मिताः ॥ १७६ ॥

## वात्स्यायनः। दामोदरः। ( कामशास्त्रम् )

वात्स्यायनेन रचितं कामशास्त्रं महर्षिणा।
कलाविलासोऽपि तथा क्षेमन्द्रस्य कवेः कृतिः ॥१७७॥
दामोदरेण रचितं विख्यात कुट्टनीमतम्।
तथैवानङ्गरङ्गाद्या ग्रन्थाः सन्ति पुरातनाः ॥ १७८ ॥

## प्रतीहारेन्दुराजः। ( ई० १००० )

प्रतीहारेन्दुराजेन काव्यालङ्कारसंग्रहः।
कृतो मुकुलशिष्येण दशमे शतके पुरा ॥ १७९ ॥

## नीलकण्ठः। ( ई० १००० )

दशमे शतके नीलकण्ठेन कविना कृतम्।
शिवलीलार्णवं काव्यं गङ्गावतरणन्तथा ॥ १८० ॥

## पद्मगुप्तः ( परिमलः ) । ई० १००० )

मृगाङ्कगुप्ततनयः पद्मगुप्तो महाकविः।
दशमे शतके जातः सिन्धुराज सभाबुधः ॥ १८१ ॥

रचितं तेन नवसा-हसाङ्क चरिताभिधम् ।
इतिहास महाकाव्यं प्रसाद गुणभूषितम् ॥ १८२ ॥

गुणाढ्यः । ( प्रथमशताब्दो )

पैशाच्यां रचिता श्रीमद्गुणाढ्यस्य बृहत्कथा ।
प्रथमे शतके ख्याता प्राचीना लभ्यते न सा ॥ १८३ ॥

सोमदेवः । ( ई० ११०० )

विदुषा सोमदेवेन समनूद्य बृहत्कथाम् ।
कथासरित्सागराख्यो ग्रन्थः पद्यैर्विनिर्मितः ॥ १८४ ॥

क्षेमेन्द्रः । ( ई० ११०० )

काश्मीरराजानन्तस्य सभापण्डित आत्मवान् ।
एकादश्यां शताब्द्यान्तु क्षेमेन्द्रोऽभून्महाकविः ॥ १८५ ॥
दशावतारचरितं रम्या समयमातृका ।
पद्यकादम्बरीकाव्यं सन्ति तस्य विपश्चितः ॥ १८६ ॥
तथा गुणाढ्यस्य कथामाश्रित्यानेन सूरिणा ।
बृहत्कथामञ्जरीति नाम्नी रम्या कथा कृता ॥ १८७ ॥
औचित्यचर्चा विख्याता क्षेमेन्द्रस्य महाकवेः ।
छन्दो ग्रन्थोऽपि विख्यातः सुवृत्ततिलकाभिधः ॥ १८८ ॥
बोधिसत्त्वावदानस्य नीतिकल्पतरोस्तथा ।
प्रख्यातोऽस्ति चतुर्वर्गसंग्रहस्य स लेखकः ॥ १८९ ॥

हेमचन्द्रः । ( ई० १००० )

श्वेताम्बरीयजैनेन हेमचन्द्रेण सूरिणा ।
कुमारपालचरितं दशमे शतके कृतम् ॥ १९० ॥

श्रीकृष्णमिश्रः । ( ई० ११०० )

एकादश्यां शताब्द्यां श्रीकृष्णेन कविना कृतम् ।
प्रबोधचन्द्रोदयाख्यं ख्यातमद्वैतनाटकम् ॥ १९१ ॥

## मधुसूदनमिश्रो दामोदरमिश्रश्च । ( ई० ११०० )

मधुसूदन मिश्रस्य तथा दामोदरस्य च ।
हनुमन्नाटकं काव्यं संगृहीतमवाप्यते ॥ १९२ ॥

## भट्टोद्भटः । रुद्रटः । ( ई० ११०० )

भट्टोद्भटस्य विख्यातः काव्यालङ्कारसंग्रहः ।
रुद्रटस्यापि ग्रन्थोऽस्ति काव्यालङ्कार नामकः ॥ १९३ ॥

## भट्टनायकः । मुकुलः । ( ई० ११०० )

श्रीभट्टनायककृतं ख्यातं हृदयदर्पणम् ।
अभिधा मातृका ख्याता मुकुलस्य कवेः कृतिः ॥ १९४ ॥

## कुन्तकः । ( ई० ११०० )

कुन्तकस्यास्ति विख्यातो ग्रन्थो वक्रोक्तिजीवितम् ।
वक्रोक्तिरेव काव्यस्य जीवितं तत्र वर्णितम् ॥ १९५ ॥

## महिमभट्टः । ( ई० ११०० )

प्राज्ञो महिमभट्टस्तु ख्यातो व्यक्तिविवेककृत् ।
यत्रानुमानं व्यङ्ग्यानां रसानां बोधकं स्मृतम् ॥ १९६ ॥

## धनञ्जयः । धनिकः । ( ई० ११०० )

धनञ्जयोऽलिखद् ग्रन्थं दशरूपकनामकम् ।
तट्टीका त्ववलोकाख्या धनिकेन विनिर्मिता ॥ १९७ ॥

## धनेश्वरः । वाग्भटः । ( ई० ११०० )

शत्रुञ्जयमहाकाव्यं श्री धनेश्वर सूरिणा ।
कृतं तथा वाग्भटेन नेमिनिर्वाणनामकम् ॥ १९८ ॥
वाग्भटः सोमपुत्रोऽभूदलङ्कारस्य पण्डितः ।
वाग्भटालङ्कृतिग्रन्थः प्रसिद्धस्तेन निर्मितः ॥ १९९ ॥

## शूद्रकः । श्यामलिकः । वररुचिः ईश्वरदत्तः ।

स शूद्रको वररुचिस्तथा श्यामलिकाभिधः ।
कविरीश्वरदत्तश्च चत्वारो भाणलेखकाः ॥ २०० ॥

## शंखधरः ।

कवेः शंखधराख्यस्य काव्यं हास्यरसाश्रयम् ।
लोकप्रियं प्रहसनं ख्यातं लटकमेलकम् ॥ २०१ ॥

## भोजराजः । ( ई० ११०० )

एकादशे तु शतके भोजराजेन निर्मितः ।
ग्रन्थः सरस्वतीकण्ठा—भरणाख्यो मनोहरः ॥ २०२ ॥
समस्तकाव्यालङ्कारगुणदोषनिरूपकः ।
यस्यालङ्कारग्रन्थेषु प्रतिष्ठा महती मता ॥ २०३ ॥

## मम्मटभट्टः । उव्वटः । कैयटः । वज्रटः । जैयटः ।

काश्मीरे भ्रातरावास्तामुभौ वज्रट जैयटौ ।
एकादश्यां शताब्द्यान्तु विदुषां पितरौ कवी ॥२०४ ॥
मम्मटो वज्रटसुतः काव्यालङ्कारवारिधिः ।
आसीन्नैषधकारस्य श्रीहर्षस्य च मातुलः ॥ २०५ ॥
स मेधावी कविवरः प्राज्ञः काश्मीरदेशतः ।
बाल्ये काशीं समागत्य सर्वशास्त्राण्य धीतवान् ॥ २०६ ॥
तस्य काव्यप्रकाशाख्यो ग्रन्थो लोकैः समादृतः ।
शब्दव्यापारचर्चाख्यो ग्रन्थोऽपि परिकीर्तितः ॥ २०७ ॥
मम्मटाचार्यवर्येण कृतः परिकरावधिः ।
काव्यप्रकाशः शेषोंऽशोऽल्लटभट्टेन पूरितः ॥ २०८ ॥
जैयटस्य सुतावास्ता मुव्वटः कैयटस्तथा ।
शिष्यौ च भ्रातरौ ख्यातौ मम्मटस्य मनीषिणः ॥ २०९ ॥

उव्वटोऽभूद्यजुर्वेदसंहिता भाष्यलेखकः ।
प्रदीपटीकाकारो भून्महाभाष्यस्य कैयटः ॥२१०॥

## श्रीहर्षः । ( ई० ११०० )

एकादशशताब्द्यन्ते श्रीहर्षोऽभून्महाकविः ।
कान्यकुब्जाधिपश्रीमज्जयचन्द्रनृपार्चितः ॥ २११ ॥
माता मामल्लदेव्यासीत् पिता श्रीहीर पण्डितः ।
षड्दर्शनी मामिकस्य तस्य ब्रह्मविदः कवेः ॥ २१२ ॥
तेन कर्कशया शैल्या ध्वन्यलंकारभापुरम् ।
महाकाव्यं विरचितं नैषधं विद्वदौषधम् ॥ २१३ ॥
शब्दतोऽप्यर्थतश्चैव गाम्भीर्यं परिदृश्यते ।
रीतिश्च रम्या वैदर्भी काव्ये नैषधनामके ॥ २१४ ॥
महाकाव्यमिदं रम्यं क्षीरोदधिसमं मतम् ।
प्रकृष्टविदुषामेवात्रावगाहनयोग्यता ॥ २१५ ॥
कवित्व प्रतिभापूर्णपण्डितानां शिरोमणेः ।
श्रीहर्षस्य महाकाव्यं सर्वश्रेष्ठं बुधा विदुः ॥२१६॥
"तावद्भा भारवेर्भाति यावन्माघस्य नोदयः ।
उदिते नैषधे काव्ये क माघः क्च भारविः" ॥ २१७ ॥
तस्यैव खण्डनग्रंथः खण्डखाद्याभिधो मतः ।
अतिदुर्बोधया शैल्या निबद्धस्तर्ककर्कशः ॥ २१८ ॥
काव्येषु यादृशं स्थानं नैषधस्य निगद्यते ।
तादृशं खण्डनस्यापि दर्शनेष्वभिधीयते ॥ २१९ ॥
तस्येश्वराभिसन्ध्याद्या आसन् ग्रन्था नवापरे ।
येषां नामानि श्रूयन्ते खण्डने नैषधे तथा ॥ २२० ॥

## विल्हणः । ( ई० ११०० )

एकादश्यां शताब्द्यान्तु विल्हणोऽभून्महाकविः ।
चौरी पञ्चाशिका यस्य खण्डकाव्येषु गण्यते । ॥ २२१ ॥

## कल्हणः । ( ई० १२०० )

कल्हणो ब्राह्मणः शैवश्चम्पकस्यात्मजोऽभवत् ।
द्वादश्यामीशवीयाख्यशताब्द्यामैतिहासिकः ॥२२२॥
काश्मीरान्तर्गतं तस्य परिहासपुराभिधम् ।
निवासस्थानमासीत्स बौद्धैरतिसमादृतः ॥ २२३ ॥
तस्यैतिहासिकं काव्यं नाम्ना राजतरङ्गिणी ।
प्राचां काश्मीरराजानां विहितं यत्र वर्णनम् ॥ २२४ ॥
अर्द्धनारीश्वरस्तोत्रं प्रसिद्धं तस्य विद्यते ।
ज्यौतिषज्ञः स तत्काव्यैर्विद्वद्भिरवधार्यते ॥ २२५ ॥

## जोनराजः । प्राज्यवरः । श्रीवरः ( ई० १२०० )

तिस्रो राजतरङ्गिण्यः कल्हणानन्तरं कृताः ।
तस्य शिष्येण जोनेन प्राज्येन श्रीवरेण च ॥ २२६ ॥

## रुय्यकः । ( ई० १२०० )

काश्मीरो रुय्यककविर्द्वादशे शतकेऽभवत् ।
यस्यालङ्कारसर्वस्वो ग्रन्थोऽलङ्कारबोधकः ॥ २२७ ॥

## मंखः । ( ई० १२०० )

रुय्यकस्य प्रियः शिष्यो मंखो नाम महाकविः ।
श्रीकण्ठचरितं काव्यं रम्यं येन विनिर्मितम् ॥ २२८ ॥

## विद्याधरः । ( ई० १२०० )

एकावली विरचिता विद्याधरविपश्चिता ।
काव्यप्रकाशपद्धत्याऽर्थालङ्कारप्रबोधिनी ॥ २२९ ॥

## हलायुधः । ( ई० १२०० )

हलायुधेन कविना वैयाकरणसूरिणा ।
काव्यं कविरहस्याख्यं द्वादशे शतके कृतम् ॥२३० ॥

श्रीमल्लक्ष्मणसेनस्य वङ्गदेशमहीभुजः ।
मन्त्री धर्माधिकारी चाभवद्देष कवीश्वरः ॥ २३१ ॥

## जयदेवः । ( ई० १२०० )

पंचासन् जयदेवाख्याः कवयो लोकविश्रुताः ।
अति प्रसिद्धौ द्वौ तत्र जयदेवौ महाकवी ॥ २३२ ॥
द्वादश्यां तु शताब्द्यां श्रीजयदेवोऽलिखत् कविः ।
गातुवर्यो गीतिकाव्यं गीतगोविन्दनामकम् ॥ २३३ ॥
वंगदेशे वीरभूमिप्रान्ते जनमनोहरे ।
किन्दुविल्याभिधे ग्रामे जनिस्तस्याभवत् कवेः ॥ २३४ ॥
पितास्य भोजदेवोऽभून्माता माम्ना च राधिका ।
पत्नी पद्मावती ख्याता सती धर्मपरायणा ॥ २३५ ॥
पीयूषवर्षोपनाम्नः काव्यालङ्कारभास्वतः ।
विदर्भ-कुण्डिनपुरे वास्तव्यस्य महाकवेः ॥ २३६ ॥
द्वितीय जयदेवस्य महादेवः पिताभवत् ।
माता सुमित्रा देव्यासीत् द्वादशे शतके स्थितिः ॥ २३७ ॥
सीतारामगुणग्रामभूषितं प्रीतिवर्धनम् ।
प्रसन्नराघवं नाम रचितं तेन नाटकम् ॥ २३८ ॥
चन्द्रालोको विरचितोऽलङ्कारग्रन्थ उत्तमः ।
पीयूषवर्षिणा तेन कविनातिमनोहरः ॥ २३९ ॥

## अप्पयदीक्षितः ।

मीमांसको महाप्राज्ञः कविरप्पय दीक्षितः ।
ख्यातं कुवलयानन्दालङ्कारं कृतवान् प्रियम् ॥ २४० ॥

## केदारभट्टः ।

केदारभट्ट कविना वृत्तरत्नाकराभिधः ।
छन्दोग्रन्थो विरचितः शतके तु त्रयोदशे ।

## गोवर्द्धनः ।

आर्यासप्तशती ख्याता गोवर्द्धनकवेः कृतिः ।
राज्ये लक्ष्मणसेनस्य वङ्गदेशमहीपतेः ॥ २४१ ॥

## धोयीकविः ।

काव्यं पवनदूताख्यं कविना धोयिना कृतम् ।
य आसीद् गायकाचार्यस्तथा श्रुतधरो महान् ॥ २४२ ॥

## त्रिविक्रमः । ( ई० १००० )

गद्यपद्यात्मकं काव्यं चम्पूरित्यभिधीयते ।
नलचम्पूरिति ख्याता त्रिविक्रमकवेः कृतिः ॥ २४३ ॥

## शेषकृष्णः ।

श्रीपारिजातहरणं चम्पूकाव्यं मनोहरम् ।
श्रीशेषकृष्णकविना रचितं जनरञ्जनम् ॥ २४४ ॥

## नारायणपण्डितः ।

चतुर्दशेऽथ शतके स नारायण पण्डितः ।
हितोपदेशमलिखत् पञ्चतन्त्रानुसारतः ॥ २४५ ॥

## देवदत्तः ।

पुरुषोत्तमदेवस्य पुत्रेण पितुराज्ञया ।
देवदत्तेन रचिता शुकसप्ततिका कथा ॥ २४६ ॥
श्रूयते तस्य शृङ्गारविलासाख्यो मनोहरः ।
ग्रन्थोऽलङ्कारशास्त्रस्य शृङ्गाररससागरः ॥ २४७ ॥

## वेदान्तदेशिकः ( व्यङ्कटनाथः ) ।

विशिष्टाद्वैत-मीमांसा-साहित्याब्जदिवाकरः ।
अनन्तसूरितनयो घटिकाशतकः कृती ॥ २४८ ॥

कविर्व्यंकटनाथाख्यः ख्यातो वेदान्तदेशिकः ।
काञ्चीनगर्यामुत्पन्नो रामानुजमतानुगः ॥ २४९ ॥
चतुर्दशे स शतके माधुर्यगुणगुम्फितम ।
महाकाव्यं रचितवान् यादवाभ्युदयाभिधम् ॥ २५० ॥
खण्डकाव्यं तथा तस्य हंसदूताभिधानकम् ।
सरसं सरलं हृद्यं प्रख्यातं मेघदूतवत् ॥ २५१ ॥

## मल्लिनाथः । ( ई० १४०० )

महामहोपाध्यायः श्री मल्लिनाथाभिधः कविः ।
चतुर्दशशताब्द्यादौ टीकाकारवरोऽभवत् ॥ २५२ ॥

## विश्वनाथः । ( ई०१४०० )

अल्लावद्दीननृपतेः समसामयिकः सुधीः ।
साहित्यदर्पणकरः कलिङ्गाधिपपूजितः ॥ २५३ ॥
गौडविप्रोमहापात्रो भानुदवसमादृतः ।
चन्द्रशेखरपुत्रोऽभूद् विश्वनाथो महाकविः ॥ २५४ ॥
चतुर्दशे स शतके सान्धिविग्रहिकः कविः ।
आसीदुत्कलदेशस्य भूषणं रससारवित् ॥ २५५ ॥
साहित्यदर्पणं तस्य सादरं पठ्यते बुधैः ।
अन्येऽपि पञ्चषास्तस्य काव्यग्रन्थाः सुवर्णिताः ॥ २५६ ॥
प्रभावतीपरिणयाभिधाना तस्य नाटिका ।
तथाचन्द्रकला नाम्नी नाटिकातिमनोरमा ॥ २५७ ॥
काव्यं नृसिंहविजयं विश्वनाथकवेः कृतिः ।
तथा कुवलयाश्वस्य चरितञ्चापि कथ्यते ॥ २५८ ॥
प्रशस्तिरत्नावल्याख्यं ख्यातं तस्य करम्भकम् ।
कृतं षोडशभाषाभिर्हृद्याभिर्विदुषां प्रियम् ॥ २५९ ॥

## शार्ङ्गधरः । ( ई० १४०० )

चतुर्दशे तु शतके जातः शार्ङ्गधरः कविः ।
लिखिता येन रुचिरा श्रीशार्ङ्गधरसंहिता ॥ २६० ॥

## वल्लभदेवः । ( ई० १५०० )

शतके पञ्चदशके वल्लभेन विपश्चिता ।
सुभाषितावलीग्रन्थः सङ्गृहीतो मनोहरः ॥ २६१ ॥

## कर्णपूरः । ( ई० १६०० )

आनन्दवृन्दावनाख्यं चम्पूकाव्यमतिप्रियम् ।
विख्यातं कर्णपूरेण षोडशे शतके कृतम् ॥ २६२ ॥

## बल्लालसेनः । ( ई० १६०० )

तथा बल्लालसेनेन षोडशे शतके कृतः ।
भोजप्रबन्धो विख्यातग्रन्थो बालमनोरमः ॥ २६३ ॥

## जगन्नाथ-पण्डितराजः । ( ई० १७०० )

शतके सप्तदशके सर्वदर्शनपारगः ।
ख्यातः पण्डितराजोऽभूज्जगन्नाथो महाकविः ॥ २६४ ॥
तैलङ्गो दाक्षिणात्योऽसौ ब्राह्मणो जनतानुतः ।
आसीन्महीभुजां मान्यः साहित्याब्जदिवाकरः ॥ २६५ ॥
माता लक्ष्मीः पिता तस्य पेरुभट्टोऽभवद्बुधः ।
स्वधर्मकर्मनिपुणो विख्यातो विदुषां वरः ॥ २६६ ॥
बाल्ये स्वपितुरेवासौ सर्वशास्त्राण्यधीतवान् ।
वीरेश्वरात् गुरोः काश्यां ततो विद्यां समाप्तवान् ॥ २६७ ॥
दिल्लीश्वरः शाहजहांस्तथा दारासिकोहकः ।
मन्त्री तस्याशफाख्यश्च प्रीत्या तं बहु मेनिरे ॥ २६७ ॥

तस्यालङ्कारसद्ग्रन्थो रसगङ्गाधराभिधः ।
ख्यातो व्याकरणग्रन्थस्तथैव कुचमर्दनः ॥ २६८ ॥
रससारविदश्चित्रमीमांसाखण्डनाभिधः ।
तस्यैव रुचिरोग्रन्थः कविभिः परिवर्णितः ॥ २६९ ॥
तद्भामिनीविलासाख्यं खण्डकाव्यमतिप्रियम् ।
जगदाभरणाख्यञ्च तथासफविलासकम् ॥ २७० ॥
रम्याः पञ्च लहर्यश्च गङ्गालहरिकादयः ।
स्तोत्रकाव्येषु विख्याता रचितास्तेन सूरिणा ॥ २७१ ॥
लवङ्गीनामिका काचिदासीत् परमसुन्दरी ।
हिन्दूराज्ञ्यां समुत्पन्ना सुताकबरभूपतेः ॥ २७२ ॥
तत्प्रेमपाशबद्धस्य रसिकस्य महाकवेः ।
तया सह विवाहोऽभद् यवनेशानुमोदितः ॥ २७३ ॥
यवनीरमणासक्तचित्तोऽपि सम्हामतिः ।
धर्मं न त्यक्तवान् स्वीयमिति प्राज्ञैर्निगद्यते ॥ २७४ ॥
व्यतीतं यौवनं तस्य यवनेश्वरसन्निधौ ।
वार्धकं मथुरापुर्यां काश्यां गङ्गातटे तथा ॥ २७५ ॥
अष्टादशेचोनविंशे विंशे च शतकेऽभवन् ।
बहवः कवयो लोके ख्याता धीरधुरन्धराः ॥ २७६ ॥
तेषां नामानि काव्यानां ज्ञायन्ते बहुधा जनैः ।
काव्यालङ्कारवार्तेयमतोऽत्रैव समाप्यते ॥ २७७ ॥

इति काव्यालङ्कारवार्ता नाम तृतीयोऽध्यायः ।

## अथ धर्मशास्त्र-पुराणवार्ता ।

वर्णाश्रमाणां धर्मास्तु प्रायश्चित्तसमन्विताः ।
आचारा व्यवहाराश्च धर्मशास्त्रेषु वर्णिताः ॥ १ ॥

"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥ २ ॥

पराशरव्यासशंखलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रवर्तकाः ॥ ३ ॥
कृते तु मानवो धर्मस्त्रेतायां गौतमः स्मृतः ।
द्वापरे शंखलिखितौ कलौ पाराशरो मतः ॥ ४ ॥

प्राचीनं धर्मसूत्रं तु गौतमस्य प्रकीर्तितम् ।
बौधायनस्यापि तथापस्तम्बस्यापि वर्णितम् ॥ ५ ॥
धर्मशास्त्रेष्वतिख्याता प्राचीनास्ति मनुस्मृतिः ।
याज्ञवल्क्यस्मृतिश्चापि वर्णिता समिताक्षरा ॥ ६ ॥
ख्याता पराशरमुनेर्व्यासस्य लिखितस्य च ।
शंखस्य च वशिष्ठस्य स्मृतिश्चान्या अपि स्मृताः ॥ ७ ॥
लक्ष्मीधरकृतोग्रन्थः कृत्यकल्पतरुः स्मृतः ।
जीमूतवाहनकृतो दायभागस्तथैव च ॥ ८ ॥

हेमाद्रेस्तुचतुर्वर्गचिन्तामणिरुदीरितः ।
तथा विश्वेश्वरकृता विख्याता स्मृतिकौमुदी ॥ ९ ॥

मित्रमिश्रस्य विदुषो वीरमित्रोदयाभिधः ।
धर्मग्रन्थोऽस्ति विख्यातः षोडशे शतके कृतः ॥ १० ॥

ख्यातो निर्णयसिन्धुस्तु सर्वधर्मनिदर्शकः ।
कमलाकरभट्टेन रचितो रुचिरो नृणाम् ॥ ११ ॥
अनन्तदेवरचितो विख्यातः स्मृतिकौस्तुभः ।
काशीनाथेन रचितो धर्मसिन्धुः प्रकीर्तितः ॥ १२ ॥

 


## अष्टादश पुराणानि ।

निःश्रेयसाय लोकानां स्वयं विष्णुर्जनार्दनः ।
व्यासावतारः कृतवान् पुराणानि महीतले ॥ १३ ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चेति पुराणं पञ्च लक्षणम् ॥ १४ ॥
म-द्वयं भ-द्वयञ्चैव ब्र त्रयं व-चतुष्टयम् ।
अ-ना-प-लिं-ग-कू-स्कानि पुराणानि प्रचक्षते ॥ १५ ॥
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं भविष्यकम् ।
ब्रह्माख्यं वामनाख्यञ्च ब्रह्मणः षट्कमीरितम् ॥ १६ ॥
पद्म वाराह-गरुड-विष्णु-भागवतानि च ।
नारदीयं पुराणञ्च विष्णोः षट्कं प्रकीर्तितम ॥ १७ ॥
मत्स्यं कूर्मं तथा लिङ्गं वाय्वग्निस्कन्दसंज्ञकम् ।
एतानि षट् पुराणानि शिवस्य प्रथितानि च ॥ १८ ॥

### ( ब्रह्मणः षट् पुराणानि )

ब्रह्माण्डे ब्रह्मसहितं ब्रह्माण्डं वर्णितं तथा ।
सर्गश्च प्रतिसर्गश्च वर्णितावतिविस्तरात् ॥ १९ ॥
सम्पूर्णं तत्पुराणन्तु लभ्यते नैव साम्प्रतम् ।
तस्यैव खण्ड एकोऽस्त्यध्यात्मरामायणाभिधः ॥ २० ॥
ब्रह्मवैवर्तनाम्नस्तु भागाश्चत्वार ईरिताः ।
ब्रह्मणः श्रीगणेशस्य गौर्याः स्कन्दस्य वर्णनैः ॥ २१ ॥
हरिश्चन्द्रस्य वृत्रस्य विश्वामित्रवशिष्ठयोः ।
दुर्गायाश्चरितञ्चापि मार्कण्डेये सुवर्णितम् ॥ २२ ॥
भविष्याख्ये पुराणे तु भविष्यद्वस्तु वर्णितम् ।
वर्णाश्रमाणां विविधा धर्माश्चापि निरूपिताः ॥ २३ ॥

ब्राह्मे सर्गस्तथा वंशो वर्णितश्चन्द्रसूर्ययोः ।
कृष्णावतारचरितं कीर्तितम्परमाद्भुतम् ॥ २४ ॥
वामने वामनकथा दक्षयज्ञस्य वर्णनम् ।
दहनं कामदेवस्य शिवोद्वाहोऽपि पठ्यते ॥ २५ ॥

( विष्णोः षट् पुराणानि )

सृष्टिर्भूमिः स्वर्गलोकः पातालश्चोत्तरोऽपरः ।
वर्ण्यन्ते पञ्चभिः खण्डैः पुराणे पद्मनामके ॥ २६ ॥
एकादश्या आमलक्यास्तुलस्याः कार्तिकस्य च ।
माहात्म्यं वर्णितं तत्र माघवैशाखयोस्तथा ॥ २७ ॥
वाराहे पूर्णरूपेण तीर्थानां वर्णनं कृतम् ।
विविधाश्च कथा रम्याः कथिता हृदयप्रियाः ॥ २८ ॥
गारुडे धर्मकर्माणि वर्णितानि समासतः ।
ज्योतिःशास्त्रं हस्तरेखाज्ञानञ्चापि प्रकाशितम् ॥ २९ ॥
विष्णोः पुराणे षड्भागाः प्रथमे सर्गवर्णनम् ।
द्वितीये वर्णिता पृथ्वी सप्तद्वीपा ससागरा ॥ ३० ॥
विस्तारो ब्रह्मविद्यायाः प्रोक्तो वेदाश्च वर्णिताः ।
तृतीये विहितं सम्यक् पुराणानाञ्च वर्णनम् ॥ ३१ ॥
चतुर्थे पञ्चमे षष्ठे क्रमाद् ब्रह्मनिरूपणम् ।
वंशानुचरितञ्चैव कृतं भक्तिनिदर्शनम् ॥ ३२ ॥
सर्वेषाञ्च पुराणानां श्रेष्ठं भागवतं मतम् ।
ज्ञानविज्ञानसहितं भगवद्भक्तिभासितम् ॥ ३३ ॥
ब्रह्मणो वर्णनं तत्र जीवस्य जगतस्तथा ।
नानाविधा ज्ञानकथा ध्रुवादीनामुदाहृताः ॥ ३४ ॥
कीर्तितो वंशविस्तारो विस्तराच्चन्द्रसूर्ययोः ।
श्रीकृष्णचन्द्रचरितं चित्रितं चित्ततोषदम् ॥ ३५ ॥

नारदीये पुराणे तु विष्णुभक्तिर्निरूपिता ।
विविधा विष्णुभक्तानां कथिताश्च कथा अपि ॥ ३६ ॥

( शिवस्य षट् पुराणानि )

मत्स्ये मत्स्यावतारस्य कथा सृष्टिसमुद्भवः ।
उत्पत्तिः कार्तिकेयस्य राज्ञां वंशाश्च वर्णिताः ॥ ३७ ॥
कूर्मे कूर्मावतारस्य कथया सह वर्णितम् ।
शिवस्य विश्वनाथस्य दुर्गादेव्याश्च पूजनम् ॥ ३८ ॥
लिङ्गे सर्गो विसर्गश्च लिङ्गतत्त्वञ्च वर्णितम् ।
लिङ्गादेव त्रयोवेदाः प्रादुर्भूता इतीरितम् ॥ ३९ ॥
वायव्ये सृष्टिरचना तत्र खण्डचतुष्टयम् ।
विस्तराद् वर्णितञ्चापि गयामाहात्म्यमुत्तमम् ॥ ४० ॥
अग्नौ दशावताराणामायुर्वेदस्य वर्णनम् ।
छन्दोऽलङ्कारयोश्चैव कृतं व्याकरणस्य च ॥ ४१ ॥
महापुराणं स्कन्दाख्यं खण्डशो लभ्यतेऽधुना ।
सर्वेषान्तु पुराणानामिदं दीर्घतमं मतम् ॥ ४२ ॥
काशीखण्डे पूर्णतया विश्वनाथोऽस्ति वर्णितः ।
उत्कलाख्ये तथा खण्डे जगन्नाथोऽस्ति वर्णितः ॥ ४३ ॥
अष्टादशपुराणानां सार एषः समुद्धृतः ।
"परोपकारः पुण्याय पापाय परपीडनम्" ॥ ४४ ॥

## अष्टादशोपपुराणानि ।

"सनत्कुमारं प्रथमं नारसिंहमतः परम् ।
नारदीयं शिवञ्चैव दौर्वासमनुत्तमम् ॥ ४५ ॥
कापिलं मानवञ्चैव तथा चौशनसं स्मृतम् ।
वारुणं कालिकाख्यञ्च साम्बं नन्दिकृतं शुभम् ॥ ४६ ॥
सौरं पाराशरप्रोक्तमादित्यञ्चातिविस्तरम् ।
माहेश्वरं भागवतं वाशिष्ठञ्च सविस्तरम् ॥ ४७ ॥

एतान्युपपुराणानि ख्यातान्यष्टादशैव च ।
सुकल्याणाय लोकानां रचितानि मनीषिभिः ॥ ४८ ॥
भूतव्योमाभ्रदृग्वर्षे दशम्यामाश्विने सिते ।
माङ्गल्ये मङ्गलदिने मुहूर्ते विजयाभिधे ॥ ४९ ॥
एषा संस्कृतसाहित्यवार्ता विद्यार्थिनां मुदे ।
कृता चतुर्भिरध्यायैर्देवदत्तत्रिपाठिना ॥ ५० ॥
भक्त्या समर्पिता चेयं सच्चिदानन्दमूर्तये ।
काशीश्वराय विभवे विश्वनाथाय शम्भवे ॥ ५१ ॥

इति धर्मशास्त्र पुराण वार्तानाम चतुर्थोऽध्यायः ।

समाप्ता चेयं संस्कृतसाहित्यवार्ता साम्बशिवपादारविन्देषु समर्पिता ।



